शृङ्गेरी-शारदापीठ-स्वीकृता
शासन - पुरस्कृता
विश्वप्रिया

# शारदा

संपादकः पं. वसन्त अनन्त गाडगीळ

'शारदा'-कार्यालयः,
झेलम, पत्रकारनगरी,
पुण्यपत्तनम् ४११ ०५३
☎ — 332124

वर्षं ३५ अङ्कौ ७,८ | वार्षिकं मूल्यं रू.५०/- | यावज्जीवं रू.१०००/-
माघ शके १९१५ | फेब्रुवारी-१९९४ | अस्य अङ्कस्य रू.५०/-

## ध्रुवं ध्रुवस्त्वं भुवि मान-दण्डः।

[ कृपया पठ्यतां संपादकीयं पृ.३ ]

प्राच्य-विद्या-विश्व-गुरुः ।
डॉ.रामचन्द्र नारायण दाण्डेकरः ।
जागतिक-संस्कृत-परिषदः प्राणाधारः
प्रेरकश्च सर्व-प्रियः अध्यक्षः ।
स्वायुषः संप्रति पञ्चाशीति-तमे (८५)
वर्षेऽपि संततं क्रियावान् ( पण्डितोत्तमः )
प्राकृतिक-प्रतिकूलतया नैव गन्तुं क्षमः
गते मासि ( जाने. ९-१५,१९९४ )
ऑस्ट्रेलिया-देशे मेलबोर्न-नगरे संपन्नस्य
नवमस्य महाधिवेशनस्य कृते
जागतिक-संस्कृत-परिषदः ।
अध्यक्ष-पदस्य प्रेषितं तदीयं त्याग-पत्रं
कृतज्ञतापुरःसरं स्वीकृतं परिषदा ।

* डॉ.दाण्डेकर-स्थाने संप्रति नियुक्तोऽस्ति नूतनाध्यक्षत्वेन संस्कृत-विश्वस्य सुपरिचितः, शासन-समाजोभय-मान्यः, पूर्वतनः कुलपतिः संपूर्णानन्द-संस्कृत-विश्व-विद्यालयस्य ( वाराणसी ) कामेश्वरसिंह संस्कृत-विश्व-विद्यालयस्य ( दरभङ्गा ) च, डॉ. रामकरणशर्मा । सहर्षं हार्दम् अभिनन्दनम् मधुरवाणी-विग्रहस्य 'शारदा'-मित्रोत्तमस्य डॉ.रामकरणशर्मणः ।

* अग्रिमं दशमं महाधिवेशनं जागतिक-संस्कृत-परिषदः सुनिश्चितं दक्षिण-भारते कर्णाटक-राजधानी-बेङ्गालूरु-नगरे १९९७ क्रिस्त-वर्षे ।

### योजकः तत्र दुर्लभः ।

दिल्ली-संस्कृत-अकादमी-समायोजितं संस्कृत-पत्रकार-संमेलनं संपत्स्यते संस्कृत-भवने (अशोक-विहारस्थे वजीरपुर-विभागे) १८ फेब्रुवारी १९९४ शुक्रवासरे । संस्कृत-पत्रकार-संमेलनं सातत्येन सांवत्सरिक-व्रतत्वेन प्रतिवर्षं भूयसा व्ययेन महता कष्टेन च समायोज्य अकादमी-सचिवेन कविवरेण पं.श्रीकृष्ण सेमवालेन यथार्थतां नीतं सुभाषितं 'योजकस्तत्र दुर्लभः ।' इति ।

# डॉ.रामचन्द्र नारायण दाण्डेकर

| | |
|---|---|
| क्रि. १९३८ | पीएच्.डी.हायडेल्बर्ग (जर्मनी) |
| | तत्रैव हायडेल्बर्ग विश्वविद्यालये संशोधनम् |
| १९३८-५० | पुण्यपत्तने फर्गसन-महाविद्यालये संस्कृत-प्राध्यापक-पदम् |
| १९५०-६४ | पुण्यपत्तन-विश्वविद्यालये (स्थापनाकालात्) |
| | संस्कृत-विभागाध्यपदम् |
| १९६४-६९ | तत्रैव संस्कृत-प्रगताध्ययन-केन्द्र-निदेशकपदम् । |
| १९३८-८१ | मानद-सचिवः,भाण्डारकर-प्राच्य-विद्या-सँशोधन-संस्था |
| १९३८-८१ | अ.भा.प्राच्यविद्यापरिषदः साचिव्येन महती सेवा |
| १९७३-९१ | अध्यक्षता-International union for oriental & Asianstudies. |

## बहुमानावली — डी.लिट्.

| | |
|---|---|
| संवत् २०२५ | संपूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी |
| क्रिस्त. १९८१ | बनारस-हिन्दु-विश्वविद्यालयः, वाराणसी |
| १९८५ | पुणे विश्वविद्यालयः, पुण्यपत्तनम् |
| १९९० | उत्तर-बङ्गाल-विश्वविद्यालयः, कलकत्ता |
| १९९३ | टिळक महाराष्ट्र विद्यापीठम्, पुण्यपत्तनम् |
| १९६२ | पद्मभूषणम् |
| २४.२.९३ | शंकरदेव-पुरस्कारः (आसाम-शासनम्),चक्रवर्ती-स्वर्णपदकम् |
| | लक्ष-रूप्यक-पुरस्कारः, उत्तर-प्रदेश-संस्कृत-अकादमी, लखनौ |
| | १९९४ रायचौधरी-स्वर्णपदकम्,एशियाटिक सोसायटी (कलकत्ता) |

---

## 'हन्त! हतास्तस्यास्ते मनोरथाः!'

राष्ट्रपति डॉ.राधाकृष्णन्, भारत-शिक्षामन्त्री श्री.छगला एताभ्यां साग्रहं भृशं प्रार्थिते अपि डॉ.रा.ना.दाण्डेकर-महोदयेन सिमला-स्थितस्य मानव्य-प्रगताभ्यास-केन्द्रस्य सर्वाधिकार-प्रमुख-पदं नैव स्व्यकारि, महाभारत-संपादन-कार्यम् आन्तं प्रापयितुम् । ओत्तम-श्वासं महाभारतम् इति व्रत-स्वीकरणात् ।

महामात्या श्रीमती इन्दिरा गान्धी ऐच्छत् तत्-केन्द्रम् एव पुण्यपत्तनम् आनेतुं भाण्डारकर-संस्था-परिसरे (प्रतिवर्षं ३५ लक्ष-रूप्यक-द्रव्यं च व्ययीकर्तुम्) यत्र सुलभं डॉ.रा.ना.दां.मार्गदर्शनम् ।

परं हा हन्त! हतास्तस्यास्ते मनोरथाः निर्घृण-हत्यया तस्याः ।

---

**************************************************

## बहुमान-स्वीकारावसरे डॉ.रा.ना.दाण्डेकर-कृता प्रार्थना

नव-सत्यात् परावृत्तिर् अर्ध-सत्येन तोषणम् ।
सर्व-सत्यज्ञता-गर्वो न मे सन्तु कदाचन ॥

**************************************************

शृङ्गेरी - शारदा - पीठ - स्वीकृता शासन - पुरस्कृता विश्वप्रिया

'शारदा'-कार्यालयः,
झेलम, पत्रकारनगरी,
पुण्यपत्तनम् ४११ ०५३
☎ — 332124

वर्षं ३५ अङ्को ७,८ | वार्षिकं मूल्यं रू.५०/- | यावज्जीवं रू.१०००/-
माघ शके १९१५ | फेब्रुवारी-१९९४ | अस्य अङ्कस्य रू.१०/-

संपादकीयम् -

# ... ध्रुवं ध्रुवस्त्वं भुवि मान-दण्डः ।

राजधानी-दिल्ली-नगरे नचिरमेव संपन्नं जागतिक-मराठी-परिषदः संमेलनं यस्य मङ्गलोद्घाटनं विहितं सुविद्येन राष्ट्राध्यक्षेण महामहिमेन डॉ.शंकरदयाळशर्म-महाभागेन । उद्घाटन-भाषणे स्वीये स्पष्टच्कारि महत्तां राष्ट्रियतां च महाराष्ट्र-मण्डलस्य डॉ.शंकरदयाळशर्मा-महोदयेन यद् भारत-रत्न-बहुमान-वितरणेन भारत-शासनेन सम्मानितेषु एकोनविंशति (१९) पुरुषोत्तमेषु भारत-सुपुत्रेषु पञ्च विराजन्ते महाराष्ट्रतः - (१)महर्षि धोण्डो केशव कर्वे, (२) महामहोपाध्याय डॉ.पां.वा.काणे, (३) आचार्य विनोबा भावे, (४)डॉ.भीमराव आंबेडकर, (५) J.R.D.टाटा इति । तत्रापि च सत्कृत-चतुष्टयं पुरुष-रत्न-खनि-रत्नागिरितः इति । पुरुष-श्रेष्ठ-पञ्चक-मध्ये 'धर्मशास्त्रेतिहास'कारः प्राच्यविद्या-महापण्डितः म.म.डॉ.पाण्डुरङ्ग वामन काणे द्वितीयोऽपि अद्वितीयत्वेन विराजते इति संस्कृत-विश्वस्य कृते अभिमानास्पदं संस्कृत-गौरव-वर्धकं च । डॉ.शंकरदयाळशर्मा- सदृशः सात्त्विकः सद्गुणासक्त एव गुण-गण-गणनाम् एतादृशीं 'देशे काले च पात्रे च' कर्तुं समर्थः परम्....?

यद्यपि न्यायालय-प्रविष्टेन केनचन प्रकरणेन वर्षेऽस्मिन् (२६-१-१९९४) आपद्मश्री-भारतरत्नं सर्वे बहुमानाः स्थगितीकृताः शासनेन, तदर्थपि स्व-नाम-धन्या सा भारतरत्न-मालिका खण्डिता भारतवर्षे इति नैव मन्तव्यं समाजेन शासनेन च । पद्मश्री-पद्मभूषण-विभूषणादीनां पुरस्काराणां कृते केवलं 'गुणाः पूजास्थानम्' इति निकषस्य स्थाने राज(/कीय)पुरुषाणां कृपा-पात्रता लाङ्गूल-चालन-वृत्तिर्वा बलिष्ठतां भजते इत्यपि नाविदितं समेषाम् । परं 'भारत-रत्न'-बहुमानस्य विषये समुचिता भवति, 'न रत्नमन्विष्यति मृग्यते हि तत् ।' इति सुभाषितस्य शरण्यता । एतादृशं रत्नं द्रष्टुम्, अन्वेष्टुं, समये पुरस्कर्तुं वा ये न पारयन्ति तेषामेव नेत्रोन्मीलनाय दिव्याञ्जनत्वेन संपादकीयस्य शारदीयस्यास्य प्रपञ्चः ।

किं ज्ञायते भारत-शासनेन दिल्लीश्वरेण, यत् तस्मिन्नेव महाराष्ट्र-मण्डले, विद्या-संस्कृति-राजधानी-नगरे पुण्यपत्तने, 'देवतागृहे नन्दादीपवत्' सन्ततं प्रकाशमानं विराजते प्राच्य-विद्या-क्षेत्रे विश्व-गुरुत्वेन सर्व-वन्द्यं, विद्या-मतिमतां वरिष्ठं, गरिष्ठं, सर्वश्रेष्ठं च विद्वद्-रत्नम्, अद्य यावद् भारत-शासनेन भारत-रत्न-सम्मानाद् दूरे स्थापितम् (विस्मृतं वा) इति?

किं ज्ञातम् इदं केनचन, हायडल्बर्ग-(जर्मनी)-विश्व-विद्यालयेन १९३८

क्रिस्त-वर्षे प्रथमवारं प्राच्य-विद्या-पाण्डित्यार्थं डी.लिट्-बहुमानं वितीर्य, शतार्ध-वर्ष-पर्यन्तम् अनन्तराय-विद्या-व्रत-परिचालनार्थं यस्य कृते १९८८ क्रिस्त-वर्षे पुनरावर्तनं पुनर्नवीकरणं वा कृतं तस्यैव विश्वोच्च-बहुमानस्य यस्य कृते, तादृशः संस्कृत-निष्ठः संप्रति भारत-वर्षे क्व विराजते इति ?

किं चिन्तितं कदापि समाजेन शासनेन च यत् स्वायुषि पञ्चोत्तरं नवमं दशकं प्रविश्यापि येन स्वीयं दैनंदिनं स्वाध्याय-व्रतं मनागपि नैव पर्यत्याजि, प्रत्युत 'स्वाध्यायोऽध्येतव्य इत्यध्ययन-विधि-वाक्यम्' आदृतं स्वीयाचार-धर्मत्वेन, तादृशः प्रत्यहं मध्याह्ने प्राच्य-विद्या-संशोधन-मन्दिरे समुपस्थाय, तदितर-समये स्वीये सदने वा स्थित्वा नियत-समये नियतं स्वीयं स्वाध्याय-कार्यं कर्तव्य-भावनया कुर्वन्, 'कर्मण्येवाधिकारस्ते....।' इत्यस्य गीता-वचनस्य महान् आदर्शः संचरिष्णुः श्रीगीता-बोधः कस्मिन् देशे कथं विद्योतते इति ?

पुरातनानां पद-वाक्य-प्रमाणज्ञानां विद्या-क्षेत्रे भारते संप्रति "पदम्, पदम्, पदम्... अत्र लप्स्यते ( तत्र वा ?) चेद्, येन केनापि सूक्तासूक्तेन मार्गेण हठात् प्राप्तव्यम् एव तद्, ( गरिष्ठं वा भवेत् कनिष्ठं वा भवतु, परम् ) परमं च तत् सुखं मत्वा तत्कल्पनयैव कृत-कृत्यतां स्वस्य जीवनस्य मन्वानाः, केचन स्वयंप्रज्ञाः समस्तासु दिक्षु परिभ्रामं भ्रामं निर्विण्णाः, कथंचित् कुत्रचित् तत्-प्राप्त्या वा स्वानन्द-साम्राज्य-मग्नाः, केचन यत्र साक्षात्क्रियन्ते ( येषां वीतलज्जानां दर्शनमपि द्रष्टॄणां लज्जां संतापं च जनयति ) तत्रैव कश्चन धीरः शूरश्च विद्या-विश्व-मण्डनः स्वायुषि स्वयम् आगतस्य एकलस्य, नहि नहि, बहुमानानाम् असंख्यानां क्रमशः परित्यागं करोति, न स्वीकरोत्येव वा तान्, एतादृशः कश्चन असाधारणः सुपुत्रः भारत-मातुः केनचन कुत्रचिद् दृष्टोऽस्ति वा ?

ॐ । नैव जानीमः समेषाम् इतरेषां वा विषये । परं वयं भाग्यवन्तः स्मः साक्षात्कर्तुं श्रोतुं शरणीकर्तुं च तम् । अस्मिन्नेव यथार्थ-नामनि महाराष्ट्र-मण्डले पुण्ये पुण्यपत्तने, स्व-नाम-धन्ये भाण्डारकर-प्राच्य-विद्या-संशोधन-मण्डले । गृहे गृहिणीम् इव, मन्दिरे देवताम् इव, यज्ञ-शालायाम् अग्नि-नारायणम् इव, महाभारत-गीतायां योगेश्वरं श्रीकृष्णम् इव, रामायणे श्रीरामम् इव, बोधगयायां बुद्धम् इव, तम् उपसर्तुम्, अभिवादयितुं, सविनयादरं शरणीकर्तुम् अवश्यम् अहोभाग्यं स्वीयं मन्यामहे ।

पुण्यपत्तन-विश्वविद्यालये एम्.ए.-प्रथम-द्वितीय-वर्ष-द्वये ( १९६४-६५ ) छात्रत्वेन वर्गं प्रविश्य, विलम्बेन समागते "किं प्रवेष्टव्यं वा मयान्तः श्रीगुरो ?" (May I come in Sir?) इति सभयं पृष्टे च, सपदि "नैव ।" (No) इति प्रत्युत्तरं कठोर-स्वरं श्रुत्वा, वर्गाद् बहिरेव पद्मासनेन समुपविश्य वा, घण्टान्तं तदा तदा श्रुतः सः श्रुति-मीमांसापरः स्फटिक-स्वच्छ-ध्वनिर् गिरि-गह्वरेषु मृगेन्द्र-गर्जितम् इव अद्यापि वर्षाणां त्रिंशतेर् ऊर्ध्वमपि, सुस्पष्टं, श्रवण-पुट-पेपीयमानस्तिष्ठति प्रत्यभिज्ञा-विशेषश्चायं सलीलं नयति सुखानुभूति-साम्राज्यं, 'तस्मिन्नेव देशे तस्मिन्नेव काले वर्तामहे' इति ।

ततः प्रभृति नित्यं श्रवण-पदवीं प्राप्नुवन्ति नैके समाचाराः सन्मित्रेभ्यः दैनिक-वृत्तपत्र-माध्यमेन च, पण्डित-पुण्डरीकोत्तमानाम् एतेषां विषये यद् अमुकेन

शासनेन, प्रशासनेन, महामण्डलेन, विश्वख्यातेन विश्व-विद्यालयेन, देशिकेन वैदेशिकेन वा बहुमान-वितरणेन ( तत्प्रेषणेन वा ) सम्मानिता: सन्ति सश्रद्धं श्रद्धेया इमे इति । परं विस्मय-जनकम् इदम्, अननुभूत-पूर्वम् इतरत्र, नैकेषाम् इतरेषां विषये, यद् एतैः स्वीकृतानां बहुमानानाम् अपेक्षया न्यक्कृतानां सुदूरं स्थापितानां च सम्मानानां पदानां वा संख्या तदधिका भवति ।

वयं स्वयं जानीम: संवत्सराणां दशकात् प्राग् एव वाराणसेयेन केनचन पण्डितेन, पण्डित-पत्रिका-संपादकेन, कस्यचन धूर्त-धौरेयस्य कुटिलस्य हस्तेन प्रेषितम् ( आदौ तस्य कृते ततश्च ) एतेषां नाम्ना 'महामहोपाध्यायोपाधि'-पत्रम् । एतैः सपदि तत्स्वयम् उत्किर-पात्रे प्रक्षिप्तं नैव च कदापि तदुपयोग: कृत: । तेन धूर्त-वञ्चकेन तु येन स्वस्य कृते समानीतं, तत् स्वयं स्वीकृत्य मिष्टान्नम् इतर-जनेभ्य: ससमारोहं भोजोत्सवेन दत्वा 'अहो बहुमान:!' इति सानन्दं तत् सर्वत्र प्रसारितम् आन्तं तद् धारितं च । अन्येन महाविद्यालय-प्राचार्येण शिष्योत्तमेनापि न्यक्कृत-महामहोपाध्याय-पदवीकानाम् एतेषाम्, अवश्यं तत् स्वीकृत्य सर्वे संबन्धिन: समादिष्टा: साग्रहं यत् "सर्वैर् अवश्यम् उपयोक्तव्यम् उपपदम् इदं मन्नाम्ना सहैव" इति । हा हन्त! संप्रति कथामात्र-शेषौ तौ द्वावपि महामहोपाध्यायौ ।

भारत-शासनेन स्वातन्त्र्य-दिने दीयमान: सांवत्सरिक-यावज्जीव-मानधनोपेत: राष्ट्रिय-पण्डित-पुरस्कार: सुखं द्वारि समुपस्थित: स्वयमेव "माऽस्तु मादृशस्य नूतन-विद्या-विभूषितस्य कृते, परं तिष्ठतु पारंपरिक-पाङ्क्ताध्ययन-धन्यस्य प्राचीन-प्रणाली-पण्डितरत्नस्य कृते ।" इति येन सविनयं सादरं च प्रत्यर्पित:, एतादृशस्य विद्वद्-रत्नस्य नामान्तरं कुत्रचिद् ज्ञायते श्रूयते वा ?

भाण्डारकर-प्राच्य- विद्या-संशोधन- मन्दिरम्, अखिल-भारतीया प्राच्य-विद्या-परिषद् (A.I.O.C.) , अन्ताराष्ट्रीया संस्कृताध्ययन-संघटना (International Association for Sanskrit Studies) एतादृशीनां नैकासां संस्थानां महासाचिव्यं, स्वयमेव समये परित्यज्य पद-बहुमान-मण्डनेभ्य: सुदूरं स्वात्मानं संस्थाप्य, स्वाध्याय-स्वानन्द-मग्न:, श्रुति-विद्या-समुपासक: डॉ.रामचन्द्र नारायण दाण्डेकर: केन्द्र-शासनेन यदि 'भारत-रत्न'-वितरणेन सपदि सत्करिष्यते तर्हि नायं बहुमान: स्याद् विद्या-विभवस्यास्य, परं भारत-रत्नम् एव स्वयंभूषितं भवेद् एतत्-कण्ठाहार-मध्ये मध्य-मणित्वेन । यत: 'स्थित: पृथिव्या इव मानदण्ड: ।' इति कविकुलगुरु-कालिदासोक्ति-चरितार्थताम् अनुभवाम: श्रुति-विद्या-क्षेत्रे 'डॉ.रा.ना.दां.'-पदारविन्देष्वेव । नान्यत्र । नान्य: पन्था विद्यतेऽयनाय भारत-शासनस्य कृते । यदि 'देशे काले च पात्रे च' समर्पणीयं संप्रति भारतरत्नं तर्हि विद्योततेतमाम् एकम् एव परमं पदं यन्नामास्ति–डॉ.रामचन्द्र नारायण दाण्डेकर

☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆

नमोऽस्तु दाण्डेकर रामचन्द्र नारायणानन्द श्रुति-प्रकाश ।
प्राच्य-प्रतीच्योभय-विश्व-वन्द्य ध्रुवं ध्रुवस्त्वं भुवि मानदण्ड: ॥

☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆☆

# अमृतं तद् अयाचितम् ।

'शारदा'-पत्रस्य प्रारम्भ-कालादेव चिराय मित्रोत्तमैः डॉ.वसन्त त्र्यं.झाम्बरे-महाभागैः 'शारदा'-कार्यालयं स्वयम् आगत्य महता प्रेम्णा सानन्दं सादरं च समर्पितानि निम्न-लिखितानि दश ग्रन्थ-रत्नानि 'शारदा'यै । अहोभाग्यम् इदं 'शारदा'काराणां मन्यामहे यत् स्वयम् उत्स्फूर्तं साहाय्य-सहकार्य-करावलम्बने अग्रतः सरन्ति अहमहमिकया शारदोपासकाः । इदमेव बलं 'शारदा'-जीवनस्य। धन्यवादार्हाः डॉ.झाम्बरे-सदृशाः 'देशे, काले च पात्रे च' सात्त्विकं ग्रन्थ-दानं कर्तुं प्रवृत्ताः। धन्याः स्मः। कृतज्ञाः स्मः। —संपादकः

---

1 Annals of the Bhandarkar Oriental Research Institute (Edited by R.N.Dandekar & S.D.Laddu) Volumes LXXII & LXXIII (for the years 1991,1992) AMRITA MAHOTSAVA VOLUME. (Pages 11+754) Rs.500=00.
BHANDARKAR ORIENTAL RESEARCH INSTITUTE, POONA, INDIA. 1993.

2 सुभाषित-मुक्तावली (Edited by R.N.Dandekar) पुणे विश्वविद्यालयः १९६२.

3 भगवद्गीता-लघुकोश (पृ.३८२)

4 DISCOURSES ON THE BHAGAVAD GITA by M.T.SUBBA ROW, The Theosophical Society, BOMBAY. 1888.

5 मालविकाग्निमित्र (English Translation by गोपाल रघुनाथ नान्दर्गीकर) (पृ.५२) 1879.

6 PURSUITS IN INDIAN PHILOSOPHY, Dr.S.RANGANATH.

7 स्वप्नवासवदत्तम् (पृ.५०+२३४) G.K.R. मद्रास 1940.

8 The Toy-Cart of Clay, Translated by S.G.Paranjape (पृ.१८६)

9 Sanskrit Drama & Dramatists K.P.Kulkarni (पृ.२१२+१२) 1927.

10 तर्कसंग्रहसार आचार्यभक्त विष्णु वामन बापट (पृ.८२) १९१४.

* * *

# कस्मात् संस्कृतमध्येयम् ?

— मिश्रोऽभिराजराजेन्द्रः
शिमला-विश्व-विद्यालये
संस्कृताचार्योऽध्यक्षश्च ।

असंस्कृतं भवेद् राष्ट्रं भरतानां न वै यथा ।
तस्मात् संस्कृतमध्येयम् अहोरात्रं प्रति-क्षणम् ॥ १

मातुः स्तन्यं विना बालो यथा नो पुष्टिमर्हति ।
समाजो भारतीयोऽयम् अपुष्टः संस्कृतं विना ॥ २

शरीरं विधिना सृष्टं पञ्च-तत्त्व-समुच्चयैः ।
तथापि क्व तु संस्कारस् तदीयः संस्कृतं विना?॥ ३

विना गङ्गां विना गोदां विना विन्ध्यं हिमाचलम् ।
क्व तिष्ठेद् भारताऽस्तित्वं विना गीर्वाण-भारतीम् ॥ ४

भारते चापि सम्भूय पठितं यैर् न संस्कृतम् ।
दर्शनायैव ते जाता हन्त बिम्ब-फलोपमाः ॥ ५

वरमेको गुणी पुत्रो देववाणी-विशारदः ।
न चाङ्ग्ल-भाषाविज्ञाः पञ्चषा हीन-वृत्तयः ॥ ६

अद्वितीयमपि श्रेष्ठं सुतं संस्कृत-पारगम् ।
प्रसूय जननी धन्या मातृ-सौभाग्य-गर्विता ॥ ७

संस्कृतं ये न जानन्ति संज्ञयाऽपीह भारते ।
अश्रुत-पितृ-संज्ञास्तान् जारजान् एव मन्महे ॥ ८

सम्भवेन्नु कथं राष्ट्रे संस्कृताध्ययनं विना ।
आर्षाचरण-पद्धत्याः प्रतिष्ठाऽत्र महीयसी ॥ ९

नाभि-कस्तूरिका-कल्पा संस्कृता वाग् इयं मता ।
भ्रान्ता भ्रमन्त्यरण्यान्यां मूढा गन्ध-मृगा इव ॥ १०

न स्यात् सौध-सुखं कामं वरं विटपि-संश्रयः ।
संस्कृताभिरुचिश्चैका स्यान्मे जन्मनि जन्मनि ॥ ११

यथा क्षेत्रं विना शस्यं यथा वापी विना जलम् ।
तथैव भारतं राष्ट्रं विना संस्कृत-भारतीम् ॥ १२

अनिवार्यं यथा भक्ष्यं पेयं च जीवितुं सुखम् ।
तथैव संस्कृतं ग्राह्यं ज्ञान-संस्कार-हेतवे ॥ १३

वेद-वेदाङ्ग-सम्मिश्रं पौराणं शास्त्र-सञ्चितम् ।
यत्र संरक्षितं यत्नैर् अध्येयं तन्नु संस्कृतम् ॥ १४

संस्कृतं क्व नु दिव्याभं ज्ञान-विज्ञान-सम्मतम् ।
क्व च भाषान्तरं सर्वं दोष-दारिद्र्य-संकुलम् ? ॥ १५

बीयूटी[But]-बटेत्याहुर् आङ्ग्ल्यां यदि विशारदाः ।
पीयूटी[Put]-पुटेतीव कथमुच्चार्यते भृशम् ?॥ १६

एम्वायेति[My] कृते शब्देऽप्यकारायोजनं विना ।
कथमुच्चार्यते मायेत्यवगन्तुं न शक्यते ॥ १७

निग्टेत्युच्चारणं साधु भाति वर्ण-प्रयोगतः ।
नाइटेति[Night] कथं तर्हि जी-एच्-वर्णौ क्व विद्रुतौ ?॥ १८

सर्वं पर्याकुलं भाति विपर्यस्तं स्खलद् गति ।
आङ्ग्ल-शब्देषु यत्किञ्चिल्लिख्यते तन्न पठ्यते ॥ १९

शब्दे शब्दे ततो यत्नः कार्यस्तत्रास्ति पाठकैः ।
त्रुटयः संभवन्त्येवान्यथा प्रति-पद-क्रमम् ॥ २०

प्रातिवेशिक-संदर्भे निषेधार्थे च यद्यपि ।
नेबरेति[Neighbour/Never] पदं त्वेकं वर्ण-योगस्तु भिद्यते ॥ २१

अतो नु साम्यमाश्रित्य लेखने पठनेऽथवा ।
किञ्चित्कर्तुं सविश्वासं निर्विशङ्कं न विद्यते ॥ २२

देववाणी पुनश्चैषा सर्व-दोष-विवर्जिता ।
अत्र यल्लिख्यते वर्णैः केवलं तन्नु पठ्यते ॥ २३

भवेद्-गो-चारको ग्राम्यो नागरो वा महामतिः ।
उभावेव पदं सर्वं त्वभिधत्तः यथायथम् ॥ २४

ह्रस्व-दीर्घ-प्लुतानां च स्वराणां सुव्यवस्थया ।
स्वरोच्चारण-सन्दर्भे न शङ्का जातु जायते ॥ २५

निखिले भारते राष्ट्रे किं च पूर्णे महीतले ।
देवभाषा-पदानां तु रूपम् एकं विलोक्यते ॥ २६

नियमैः शब्द-शास्त्रीयैः पाणिनीयैः स्थिरीकृता ।
च्युतिं नाणीयसीं याति संस्कृता वाग् इयं मता ॥ २७

तस्माद् वैज्ञानिकी प्रोक्ता भारतीयं सनातनी ।
अनन्त-शब्द-निर्माणाऽप्यनन्तार्थ-प्रकाशिका ॥ २८

त्रिविधैः पुरुषैर् एव प्रथमोत्तम-मध्यमैः ।
क्रिया-निष्पादकैर् अत्र त्रिभिर्हि वचनैस्तथा ॥ २९

काल-खण्ड-विशेषे हि क्रिया न्वेकैव भेदतः ।
नवधा जायते नूनं कर्तॄणां गुण-सारिणी ॥ ३०

यतो हि काल-खण्डास्ते वर्तमानादि-भेदतः ।
दशधाऽतः क्रिया सैव दृष्टा नवति-रूपिणी ॥ ३१

काल-खण्डा इमे सर्वे त्रैकालिक-व्यवस्थया ।
लकारैर् दशभिः ख्याता वर्तमानादि-बोधकाः ॥ ३२

यदि क्रिया पुनस् सैव विविधार्थेषु योज्यते ।
इच्छा-प्रेरणाऽऽभीक्ष्ण्य-नाम-धात्वादि-काङ्क्षया ॥ ३३

रूपाणि संभवन्त्यस्यास् तावन्त्येव पुनः खलु ।
णिजन्तानि यङन्तानि सन्नन्तादीनि यत्नतः ॥ ३४

अनया नु दृशैकस्याः क्रियाया अधि-संस्कृतम् ।
सन्ति रूपाण्यनन्तानि व्यापार-बोधवन्ति नु ॥ ३५

क्रिया सैवेयमेका चेत् प्रत्ययैः कृद्भिरिष्यते ।
कृत्याख्यैः प्रत्ययैर् वापि वक्त्राकाङ्क्षा-प्रपूरकैः ॥ ३६

तदा संभाव्य-रूपाणां साहस्री-लक्ष-संयुताम् ।
गणनां विधिवत् कर्तुं समर्थः को नु भूतले ?? ३७

आत्मार्थं च परार्थं च प्रयुक्तेयं क्रिया ततः ।
प्राक्तनाचार्य-पद्धत्या भवत्यष्टादश-क्रमा ॥ ३८

यथा चैवं क्रिया दृष्टा न्वष्टादश-विधा खलु ।
तथा संज्ञा-पदं चापि संभवत्येकविंशतिः ॥ ३९

क्रिमया सह संबन्धाः संभवाः सप्तधा यतः।
यथेष्टे वाक्य-निर्माणे कर्तृ-कर्मादि-संज्ञया ॥ ४०

वचनानां त्रयाणां च स्थिरया सुव्यवस्थया ।
एकविंशति-रूपाणि सुबन्तानि ततः खलु ॥ ४१

'रामः रामौ च रामाश्च' कर्त्तरीति व्यवस्थितम् ।
'रामं रामौ च रामांश्च' व्यवस्था कर्मणि त्रिधा ॥ ४२

सन्ति 'रामेण रामाभ्यां रामैः' करण-कारके ।
'रामाय ननु रामाभ्यां रामेभ्यः' संप्रदानके ॥ ४३

अपाये 'रामाद् रामाभ्यां रामेभ्यश्' चेति दृश्यते ।
'रामस्य रामयोः रामाणां' च संबन्ध-मात्रके ॥ ४४

कारकेऽन्त्येऽधिकरणे 'रामे च रामयोर् अथ ।
रामेषु' इति च रूपाणि सन्ति शास्त्र-व्यवस्थया ॥ ४५

कर्तारो यदि योज्येरन् प्रथमोत्तम-मध्यमाः।
स्वानुकूल-क्रिया-रूपैर् वचनैश्चापि संगतैः ॥ ४६

तदा संस्कृत-वाक्यानि शुद्ध-शुद्धानि पाठकैः ।
निर्मातुं ननु शक्यानि प्रयत्नैर् अल्प-मात्रकैः ॥ ४७

न शङ्का न च संदेहो न तथा संभ्रमः क्वचित् ।
संस्कृते वाक्य-निर्माणे धारणा यदि निर्मला ॥ ४८

समासादि-व्यवस्थाभिः सूत्र-रूपम् उपागता ।
भाषेयं संस्कृता रम्या ध्रुवं भाति गरीयसी ॥ ४९

संस्कृता कठिना भाषा जटिला दुर्गमा तथा ।
एवं विवदमानानां रक्षित्री शारदा स्वयम् ॥ ५०

तर्तुं यो न विजानाति तदर्थं दुस्तरा नदी ।
स्वाभाविकोऽयं वृत्तान्तो नात्र कार्या विचारणा ॥ ५१

शिक्षणीयं संतरणं प्रथमं संतितीर्षुणा ।
एवं कृते समुद्रोऽपि भयं नोपजनिष्यति ॥ ५२

देववाणी-रसास्वादं स्वदमानो हि केवलम् ।
निर्भरं तु विजानाति न पुनर् मत्सरी जनः ॥ ५३

क्वापि भाषा न दुर्बोधा भूतले जटिला न वा ।
कातराणां कदर्याणां कृते सर्वं भयास्पदम् ॥ ५४

भारती चीन-देशीया स्वराघात-व्यवस्थिता ।
चित्रात्मिका च दुर्बोधा विविधार्थाऽपि काकुभिः ॥ ५५

एवं सत्यपि भाषायाः प्रयोक्तारश्च भाषिणः ।
किं न सर्वाधिकाः सन्ति तस्याश् चीन-निवासिनः?? ५६

संस्कृतं चीन-भाषातोऽप्यधिकं किं दुरासदम् ?
स्वतःप्रामाण्यमाश्रित्य विदांकुर्वन्तु सूरयः ॥ ५७

त्यक्त्वाऽकारण-विद्वेषं सहजां हीन-भावनाम् ।
भ्रान्तिं मोहं भयं चापि भाषान्तर-वृथा-रतिम् ॥ ५८

अमृत-द्रोहिणोऽल्पज्ञा अये मैरेय-शंसिनः !
भ्रमत्तारक-नेत्राणि सकृद् उन्मील्य पश्यत ॥ ५९

एषा तु वाङ्मयी माता संस्कृताख्या महीयसी ।
विश्व-भाषा-प्रसूर् नित्यं वत्सला वः समीक्षते ॥ ६०

एनां श्रुत्वा पठित्वा च भाषित्वाऽपि यथायथम् ।
परमां निर्वृतिं कीर्तिं यशो मानम् अवाप्स्यथ ॥ ६१

संस्कृतज्ञो नु विश्वस्मिन् भूतले कुत्र नार्च्यते ?
यदि स्याद् अनहङ्कारो विनीतोऽथ च कोविदः ॥ ६२

सत्साहित्य-परिज्ञान-निमित्तं हन्त केवलम् ।
संस्कृतं न खल्वध्येयं सन्त्यन्येऽपि च हेतवः ॥ ६३

ज्यौतिषं कर्म-काण्डं च मन्त्र-तन्त्रादि-विस्तरः ।
संस्कृतेऽस्ति यतः सर्वं ततोऽध्येयं तु संस्कृतम् ॥ ६४

किमर्थं जायते प्राणी किमर्थं म्रियतेऽथवा ।
चेद् यद्यतीव जिज्ञासा ततोऽध्येयं तु संस्कृतम् ॥ ६५

मृत्योर् अनन्तरं जीवः कुत्र गच्छत्यलक्षितः?
किं भुनक्तीति जिज्ञास्यं ततोऽध्येयं तु संस्कृतम् ॥ ६६

कथं संचित-कर्माणि यान्ति भाग्य-स्वरूपताम् ।
यदीदं वेत्तुमाकाङ्क्षा ततोऽध्येयं तु संस्कृतम् ॥ ६७

क्रियमाणानि कर्माणि शुभान्यप्यशुभं फलम् ।
अशुभान्यपि कर्माणि कथमैश्वर्यवन्ति च ॥ ६८

सर्वेऽप्येवंविधाः प्रश्ना अनास्था-क्षोभ-कारकाः ।
यदि युक्त्या समाधेयास् ततोऽध्येयं तु संस्कृतम् ॥ ६९

अव्यक्ताद् व्यक्त-संसारः कथम् उद्याति सक्रमः ।
कथं च लीयते तस्मिन् सहसा सप्रतिक्रमः ॥ ७०

पञ्च-भूतात्मको देहः आत्मनोऽस्ति कथं पृथक् ?
किं स्वरूपोऽयमात्मा च गूढ-गूढोऽप्यगोचरः ॥ ७१

श्रेयःप्रेयोविवेकाभ्यां छिद्यते मोह-बन्धनम् ।
कथमेतद् यदि ज्ञेयं ततोऽध्येयं तु संस्कृतम् ॥ ७२

अवेद्य-वेदने शक्ता दिव्या संस्कृत-भारती ।
अदृश्य-दर्शने दक्षाऽप्यभेद्य-भेदनोद्धुरा ॥ ७३

विश्व-भाषाः समग्रास्तु यज्ज्ञाने क्षीण-शक्तयः ।
ऋषीणां वाग् इयं तत्र समर्था क्रान्त-दर्शिनी ॥ ७४

पारलौकिक-सत्यानां ज्ञाने स्याद् यदि साहसम् ।
मुमुक्षुभिः प्रशान्तैश्च ततोऽध्येयं तु संस्कृतम् ॥ ७५

पशुवज्जीवनं क्षुद्रं शोक-मोह-मलीमसम् ।
विधेयं यदि दिव्याभं ततोऽध्येयं तु संस्कृतम् ॥ ७६

मोह-लोभ-मदेर्ष्यादि-षड्-रिपु-क्लिष्ट-बन्धनम् ।
सविवेकं यदि त्याज्यं ततोऽध्येयं तु संस्कृतम् ॥ ७७

नलिनी-पत्रवत् तोये वसनीयम् अनेहसि ।
यद्यध्यात्म-दृशा नूनं ततोऽध्येयं तु संस्कृतम् ॥ ७८

कामम् अर्थ-करी भूयात् 'सा विद्या या विमुक्तये' ।
यदीदं सत्यमास्वाद्यं ततोऽध्येयं तु संस्कृतम् ॥ ७९

विश्व-भाषान्तर-ज्ञाने यदि स्याद् रुचिरात्मिकी ।
निर्विशङ्कं निरातङ्कं ततोऽध्येयं तु संस्कृतम् ॥ ८०

'संस्कृतं विश्व-भाषाणां मूलम्' अत्र न संशयः ।
भाषा-समीक्षयाऽप्येतत् सिद्धम् एव विनाश्रमम् ॥ ८१

Funding: IKS/Tattva Heritage. Digitization: eGangotri.

क्वचित् सिक्स्टी[Sixty] क्वचित् षष्टिः
क्वचित् त्रि थ्री[Three] क्वचित् पुनः ।
क्वचित् कॅमल्[Camle] क्रमेलश्च
क्वचित् किं दृष्टमन्तरम् ?? ८२

## संस्कृत-महिम्नः स्तोत्रम्-

*अधीती संस्कृतस्यैकः समग्रेऽपि मही-तले ।*
*सुखं दिग्विजयं कर्तुं क्षमते नात्र संशयः ॥* ८३

*संस्कृत-श्लोक-माधुर्यं विनाऽप्यर्थ-प्रकाशनम् ।*
*सामान्य-जन-सम्मर्दं मदयत्येव साग्रहम् ॥* ८४

*प्रतिकाण्डं यथा गाढाद् रसो गाढतरो भवेत् ।*
*इक्षु-दण्डे तथैवात्र श्लोके संस्कृत-वाङ्मये ॥* ८५

*संगीत-मयता हृद्या भावश्चापि सुधा-मयः ।*
*छान्दसी माधुरी रम्या संस्कृतस्यास्ति दुर्लभा ॥* ८६

*संस्कृताऽमृत-गर्भा वाग् देव-चारित्र्य-शंसिनी ।*
*यां पठित्वाऽनभिज्ञोऽपि कलां दैवीं समश्नुते ॥* ८७

*काव्य-शास्त्र-पुरावृत्त-वेदवेदाङ्ग-मण्डिता ।*
*कामधेनुश्चतुष्पादा संस्कृता वाग् इयं मता ॥* ८८

*सर्व-काम-दुहा दिव्या प्रवरा नन्दनाश्रिता ।*
*संस्कृता कल्पवल्लीयं नित्य-पुष्पा महीयसी ॥* ८९

*सुवर्ण-पुष्पां पृथिवीं चिन्वन्ति पुरुषास् त्रयः ।*
*संस्कृताधीतिनो गेहे पौत्रः पुत्रः पितामहः ॥* ९०

*जातो न जातको यस्मिन् संस्कृतज्ञो गृहाङ्गणे ।*
*वृथैव तस्य निर्माणे प्रतीता वास्तु-सारणी ॥* ९१

*संस्कृतज्ञ-विहीनं तद् गृहम् ऐश्वर्य-मण्डितम् ।*
*नक्षत्र-मण्डितं व्योम चन्द्र-हीनं प्रतीयते ॥* ९२

संस्कृतेनैव संस्काराः संस्कारैर् एव संस्कृतिः ।
संस्कृत्यैव भुवि ख्यातं राष्ट्रम् आर्यं नु भारतम् ॥ ९३

सत्स्वपि द्रुम-पुञ्जेषु यथा चन्दन-शाखिना ।
मालयोद्रिर् भुवि ख्यातस् तथा संस्कृत-भारतम् ॥ ९४

संस्कृतेन समायुक्तो दुरारोहोऽपि मानवः ।
मणिना भूषितो भोगी महार्घः संप्रतीयते ॥ ९५

यद्यवश्यम् अधिग्राह्या भारती काऽपि जीवने ।
कथं न संस्कृता वाणी दिव्य-पेयमिवामृतम् ॥ ९६

अल्प-प्रयत्नमात्रेण शिक्षिताः शुक-सारिकाः ।
संस्कृतं यदि भाषन्ते मानवाः कथमक्षमाः ॥ ९७

नव-प्रभातम् आयातं भद्र! जागृहि जागृहि ।
उदेति दिशि पूर्वस्यां पश्य संस्कृत-भास्करः ॥ ९८

संस्कृतेन प्रभातं स्यान् मध्यन्दिनमथो तथा ।
संस्कृतेन भवेत् सन्ध्या संस्कृतेनैव यामिनी ॥ ९९

जननं संस्कृतेनैव संस्कृतेनैव जीवनम् ।
मरणं संस्कृतेनैव लोकान्तर-गतिस् तथा ॥ १००

मिश्रोऽभिराजराजेन्द्रो देववाणी-समर्चकः ।
विश्व-विद्यालये दिव्ये शिमलाख्ये मनोरमे ॥ १०१

नियुक्तस् संस्कृताचार्यस् त्रिवेणी-कवि-संज्ञितः ।
समुत्तरयति प्रश्नं कुतोऽध्येयं तु संस्कृतम् ॥ १०२

युग्म-ग्रह-ग्रहेन्द्वब्दे आस्ते मासे सिताम्बरे ।
त्रयोविंश-दिने पूर्णं काव्यम् एतद् बुधे मया ॥ १०३

॥ इति दुर्गाप्रसादाभिराजीसूनुना त्रिवेणीकविना ॥
॥ अभिराजराजेन्द्रेण प्रणीतं संस्कृत-प्रशस्ति-काव्यं प्रपूर्णम् ॥

२३-६-९२ संस्कृत-विभागः हिमाचलप्रदेश-विश्वविद्यालयः, सिमला.

कृपया—

सत्वरं प्रेष्यतां शारदा-वार्षिकं मूल्यं रू. ५०=००

—व्यवस्थापिका


संपादकः-मुद्रकः-प्रकाशकः-स्वामी — पं.वसन्त अ. गाडगीळ.
मुद्रण-स्थलम् — शारदा-मुद्रण-सिद्धि-मन्दिरम्, २ झेलम, पत्रकारनगरी, पुणे ४११०५३
प्रकाशन-स्थलम् — शारदा-कार्यालयः, २ झेलम, पत्रकारनगरी, पुणे ४११०५३ ☎ ३३२१२४

( सार्वजनिक-विश्वस्त-निधिः ) ☎ 332124
शारदा-ज्ञान-पीठम्
( नोंदणी क्र. इ/१२७७/पुणें )
'शारदा', झेलम, पत्रकारनगरी, पुण्यपत्तनम् ४११०५३

# VAIDIK (Hindu) MARRIAGE – A SACRAMENT (संस्कार) & NOT A CONTRACT

Hindu dharma (हिन्दु-धर्म) is a misnomer. The real name is Sanatan (सनातन) or Vaidik-dharma (वैदिक-धर्म). This is perennial. Unlike other faiths marriage is a sacrament (संस्कार) in the Vaidic religion. In other faiths husband and wife are bound together by a contract. They therefore enjoy the liberty of separation at will. Vaidik religion binds the husband & wife by sacred oaths that can not be abrogated. The idea behind this concept is to maintain domestic peace, well being of the Society, prosperity and might of the nation.

A sacrament is a sacrament & has the sanctity, (पावित्र्य) derived from the presence of fire-god (अग्नि-नारायण) and Venerable erudite brahmins. (Here brahmin means a person of realization i.e. who has realised the ultimate truth.)

Do not follow a ritual as a dogma. But understand the meaning of mantras and realise the sanctity thereof.

write or contact for guidance in the field of religious rituals, cultural performances and sanskrit studies.

—Vasant A. Gadgil
Director
☎: 332124

—S.P.Marathe
President
☎: 440786

* * * * * * * * * * * * * * * * * * * * * * *

संपादकः मुद्रकः प्रकाशकः स्वामी – पं.वसन्त अनन्त गाडगीळ
मुद्रण-सिद्धिः – सौ.सुधा वसन्त गाडगीळ, २ झेलम, पत्रकारनगर, पुणें ४११०५३
मुद्रणस्थलम् – शारदा-मुद्रण-सिद्धि-मन्दिरम्, २ झेलम, पत्रकारनगर, पुणें ४११०५३
प्रकाशनस्थलम् – शारदा-कार्यालयः, २ झेलम, पत्रकारनगर, पुणें ४११०५३